## CHAPTER III—*C*.

# ॥ तृतीयमञ्जरी ॥

---

**Lesson 1.**

प्रसृतिः
अञ्जलिः
हस्तः
अरत्निः
व्यामः
पौरुषम्
ग्रीवा
अवटुः
वक्त्रम्
घ्राणम्
ओष्ठः
अधरः
चुबुकम्
कपोलम्
हनुः
रदना
तालु
सृक्किणी
रसना
ललाटम्
भ्रूः
कूर्चम्
कनीनिका
नयनम्
अश्रु

**Lesson 2.**

अपाङ्गः
कटाक्षः
श्रोत्रम्
मूर्धा
चिकुरः
अलकम्
काकपक्षः
कबरी
धम्मिल्लम्
वेणी
शिखाबन्धः
लोम
श्मश्रु
नैपथ्यम्
नेपथ्यम्
परिष्कृतः
मकुटम्
चूडामणिः
मयूरः
किङ्करः
व्याघ्रः
किरातः
वापी
अनृतम्
वृतिः

**Lesson 3.**

उष्ट्रः
शुकः
महानसः
उत्कोचः
आपणः
नूपुरः
पान्थः
कतिथः
भ्रमरः
कोशः
मार्जारः
बकः
आलवालः
धीवरः
प्राड्विवाकः
बधिरः
अजः
लेखिनी
वेश्म
अगदः
आकरः
कर्मान्तः
कन्दः
कुञ्जं
मन्दुरा

**Lesson 4.**

रङ्गवल्ली
वराटिका
सोपानम्
छुरिका
केदारः
घरट्टः
कृषीवलः
शोधिनी
डोला
उपदंशः
पुरातनम्
पिपीलिका
भित्तिः
सिकता
पेटिका
रथकारः
क्रमुकम्
पदातिः
अधित्यका
उपत्यका
सभा
वावधूकः
रामठम्
दधि
आज्यम्

**Lesson 5.**

हय्यङ्गवीनम्
वर्णी
मरीचम्
सर्षपः
लवणम्
सिद्धार्थः

## तृतीयमञ्जरी—(*Continued*).

| | | | | |
|---|---|---|---|---|
| गोधूमः | अङ्गारः | हरिद्रा | तुला | शौण्डिकः |
| कुल्माषः | अलातम् | वार्ताकः | रजतम् | जाबालः |
| चणकः | भ्राष्ट्रम् | रजतम् | पद्मरागः | देवलः |
| अतसीपत्रम् | कन्दुः | तेमनम् | कुविन्दः | नटः |
| कणिशम् | कर्करी | पृथुकम् | मौक्तिकम् | कुशीलवः |
| व्रीहिः | पिठरः | करीषः | विद्रुमः | मार्दंगिकः |
| खनित्रम् | मणिकः | गोमयम् | मरकतम् | वैणविकः |
| करपत्रम् | शरावः | दुग्धम् | हेम | नद्धी |
| खलीनम् | कंसः | द्रप्सम् | आरकूटः | भस्त्रा |
| लाङ्गलम् | आवपनम् | नवनीतम् | ताम्रम् | शिक्यम् |
| तुषः | मुद्गः | तक्रम् | अयः | मंजूषा |
| बुसम् | मुद्गदाळी | वटपत्रम् | काचः | पाञ्चालिका |
| कुलत्थम् | दर्वी | अशनाया | पारदः | घटीयन्त्रं |
| नीवारः | आढकी | पिपासा | फेनः | तन्तुः |
| मुसलः | माषः | जग्धिः | नागम् | तूलिका |
| उलूखलम् | शाकम् | बलीवर्दः | त्रपु | शाणः |
| शूर्पम् | कलम्बः | तर्णकः | तूलः | परशुः |
| चालिनी | उपस्करः | सास्ना | सौचिकः | मूषा |
| पिटः | घरट्टम् | ऊधः | पादूकृत् | खेटकम् |
| | कुसूलम् | दाम | लोहकारः | सेतुः |
| **Lesson 6.** | **Lesson 7.** | **Lesson 8.** | **Lesson 9.** | इष्टीकम् |
| कट | जीरकः | मन्थः | नाडिंधमः | |
| पौरोगव | अर्द्रकम् | वाणिज्यम् | तक्षकः | |
| चुल्ली | धान्याकम् | क्रयः | मालिकः | |
| तिंत्रिणीकम् | शुण्ठी | कुलालः | नापितः | |
| हमन्ती | आरनाळकम् | पण्यम् | रजकः | |

## तृतीयमञ्जरी—(*Continued*).

I

नाडिंधमः मूषायां हाटकं निक्षिप्यद्रवी [करोति.

कुविन्दः तन्तुना पटं वयति.

सौचिकाय कञ्चुकम् वितर.

पादूकृत् उपानहि नध्रीं बध्नाति.

लोहकारः अयसा गवाक्षं करोतु.

तक्षकः दारून् करपत्रेण तक्षति.

मालिकः जातीकुसुमानि भगवते [समर्पयति.

नापिताः उषसि तटाकतीरे प्रत्यहं नि- [वसन्ति.

रजकाः रासभपृष्ठभागात् वस्त्रग्रन्थिं [अवरोपयन्ति.

शौण्डिकः प्रपायां प्रतिसायं भृतकेभ्यः [सुरान्ददाति.

II

जाबालाः केदारेषु अजान् चारयन्ति.

देवलः स्नात्वा धौतं परिधाय देवार्चनां [कुर्यात् .

नटः वेश्यां नाटयति.

कुशीलवा वसुधाधिपानां गृहेषु गा- यन्ति.

मार्दङ्गिकः मृदङ्गं पृथक् स्वयं वादयति.

वैणविकाः सचिवपरिणयकाले वेणून् [सुखं वादयन्ति.

वैणिकाः अङ्गुळीभिः वीणां वाद- [यन्ति.

पिपीलिकाभिया शिक्येषु घृतपात्रं [गृहिण्यः निक्षिपन्ति.

घटीयन्त्रंविना सस्यं न प्ररोहति.

चित्रकारः तूलिकया चित्रं लिखति.

III

रत्नकारः शाणोपले रत्नं कर्षति.

परशुरामः परशुना भूपान् अच्छिनत् .

अतिथिभ्यः सतेमनान्नं द्रप्संच भोज- [यित्वा तांबूलं परिसमर्प्य विसर्जयति.

कृष्णः पयांसि मर्कटेभ्यः परिवेषयति.

सेवकेभ्यः तक्रान्नं सूदाः ददतु.

अशनाययोपेतः मूर्छति.

पिपासया बलीवर्दः जलयन्त्रं लेढि.

तर्णकः धेनुसमीपे उत्प्लवते.

मन्थेन शाकं सम्यगालोड्य परिवे- [षयति.

वत्सान् दामभिः गोपाः बध्नन्ति.

IV

वाणिज्यं कुर्वतां वैश्यानां लाभांशः [महान् आगच्छेदिति मन्ये.

तृतीयमञ्जरी—(*Continued*).

धेनोः ऊधः क्षीरपूरितं लम्बते.
स्वर्णकारः तुलायां रजतं तोलयित्वा [चषकं करोति.
नागरिकाः वीक्षारण्यक्षेत्रं दर्शे गत्वा आगमनसमये सकलंबवार्ताकं ग्रहीत्वा धूमशकटं आरोहन्ति.
पथिभारिकः शिरसा भारं वहति.
अलसः खलैः सदा वञ्च्यते.
चण्डालः ग्रामदक्षिणभागे वर्तते.

V

व्याधः मृगया मृगान् हन्ति.
कौलेयः सदा प्रातः द्वारि भषति.
समुद्रतीरे सायं जनाः चरन्ति.
भिषक् पारदेन अगदङ्करोति.
आरकूटं आनीय्य भाजनानि कुरुत.
त्रपुपेटिका इदानीं मास्तु.
पृथुकं जरठस्त्रियः निशि प्रत्यहं भक्ष- [यन्ति.
ममनिष्कुटे महोक्षः.
सदा सञ्चरन्ति.
नेत्रयोः दूषिकां प्रक्षाळय.

VI

मुण्डाः चेन्नपुर्यां अटन्ति.
तव भागिनेयः कुत्र गच्छति.
एषः मम भ्रात्रीयः.
अवटीटः कथं सल्लपेत् .
श्वश्रूः स्नुषायाः अलकं अलङ्करोति.
देवरः प्रजावतीं नित्यं प्रणमति.
कलौ विश्वस्ताः प्रतिगृहं निवसन्ति.
कर्णः कानीन इत्युच्यते.
पितृष्वस्रीयः रणं वर्धयति.
मातृष्वस्रीयः कलहं वारयति.

VII

वैमात्रेयः दायं न ददाति.
ननान्दा गृहे सर्वाः युवतीः तर्जयति.
बालिकाः पादेषु नूपुराणि धृत्वा आलयं [गच्छन्ति.
तर्जन्या असकृत् मूढान् तर्जयसि.
दीपोत्सवकाले अनाहतानि वासांसि [कुमाराः धरन्ति.
बुधाः राङ्कवाणि परिदधते.
सुता परिणयकाले धनिकाः कौशायानि [वसते.
श्वशुरः जामात्रे पार्थसारथिरथोत्सव- [कालेसंव्यानाङ्गुळीयकं ददाति.
पादकटकं आदाय कन्यायाः अलंकुरु.
शीतवातेन व्यजनेन सखायं वीजय.

तृतीयमञ्जरी—(*Continued*).

VIII

जननिकंकतिकया चिकुरभारान् सं- [शोध्य शीर्षे चूडामणिं बधान.
मुखालङ्करणाय तिलकसमुद्रकं आहर.
बालाः जलधितीरे धावंधावं कंदुकैः [प्रहृत्य क्रीडन्ति.
उपधानं विना जनाः कथं स्वप्तुं [शक्नुवन्ति.
मालाकारः प्रतिदिनं देवतार्चनायै [पुष्पस्रजं बध्नाति.
मृगमदः वातानुसारेण वाति.
चन्दनेन घनसारं मिळित्वा महद्भयः [प्रयच्छ.
राज्ञा पाण्डुरं एकछत्रं अनुभूयते.
प्रतिरथ्यं पूतिगन्धः नगरे व्याप्नोति.
विचिकित्सा अस्ति चेत् सर्वकार्यहानिः [स्यात्.

IX

वैशाखे रसालफलानि बहूनि उत्पद्यन्ते.
चैत्रे लिकुचफलानां उद्भवः.
वृषभाः सायं गोष्ठे रोमन्धं कुर्वन्ति.
जरठाः वर्षाकाले हसन्त्यां अङ्गारा- [न्निक्षिप्य शीतबाधां परिहरन्ति.
इन्धनं विना सूदाः पाकं कर्तुं कथं वा [शक्नुवन्ति.
जग्धिकालः समुपस्थितः.
आढकीसूपं मे प्रियतमम्.
मत्कण्ठे विद्रुममाला वर्तते.
कुलालः कुम्भं सृजति.

X

चुल्यां पाककरणाय करीषेन्धनानि [निक्षिप.
वार्ताकः पामावर्धकः.
चिरंटीहरिद्रां गळे धरति.
नृपः स्वदेशीयान् रिक्तान्प्रति आर- [नाळकं दापयति.
धान्याकं शाकंच मन्निष्कुटे वर्तते.
जीरकं आरोग्यजनकमितिमन्ये.
केरळदेशे मरीचं जायते.
आर्द्रकरसं अशान.
वधूवरौ परिणये लाजहोमं कुरुतः.
धेनोः ऊधः क्षीरपूरितं लक्ष्यते.

XI

त्रपुभाजने तक्रं निक्षिप.
वित्तहीनाः काचान् धरंति.
धनिकः हेमभूषणं धरति.
गगनात् अलातं पतति.
राजा विजयी भूयात्.
अयं देशः निरुपद्रवः स्यात्.
सर्वेषां सदा मंगळानि जायेरन्.
सर्वेपि सर्वदा जगदीशं ध्यायेयुः.

श्रीरस्तु ।

## CHAPTER IV—*A*.

# ॥ प्रथममञ्जरी ॥

### संक्षेपरामायणम् ।

---

तपःस्वाध्यायनिरतं तपस्वी वाग्विदां वरम् ।
नारदं परिपप्रच्छ वाल्मीकिर्मुनिपुंगवम् ॥ १ ॥
को न्वस्मिन्सांप्रतं लोके गुणवान्कश्च वीर्यवान् ।
धर्मज्ञश्च कृतज्ञश्च सत्यवाक्यो दृढव्रतः ॥ २ ॥
चारित्रेण च को युक्तः सर्वभूतेषु को हितः ।
विद्वान्कः कः समर्थश्च कश्चैकप्रियदर्शनः ॥ ३ ॥
आत्मवान्को जितक्रोधो द्युतिमान्कोऽनसूयकः ।
कस्य बिभ्यति देवाश्च जातरोषस्यसंयुगे ॥ ४ ॥
एतदिच्छाम्यहं श्रोतुं परं कौतूहलं हि मे ।
महर्षे त्वं समर्थोऽसि ज्ञातुमेवंविधं नरम् ॥ ५ ॥
श्रुत्वा चैतत्त्रिलोकज्ञो वाल्मीकेर्नारदो वचः ।
श्रूयतामिति चामन्त्र्य प्रहृष्टो वाक्यमब्रवीत् ॥ ६ ॥
बहवो दुर्लभाश्चैव ये त्वया कीर्तिता गुणाः ।
मुने वक्ष्याम्यहं बुद्ध्वा तैर्युक्तः श्रूयतां नरः ॥ ७ ॥
इक्ष्वाकुवंशप्रभवो रामो नाम जनैः श्रुतः ।
नियतात्मा महावीर्यो द्युतिमान्धृतिमान्वशी ॥ ८ ॥

संक्षेपरामायणम् —(*Continued*).

बुद्धिमान्नीतिमान्वाग्मी श्रीमान् शत्रुनिबर्हणः ।
विपुलांसो महाबाहुः कम्बुग्रीवो महाहनुः ॥ ९ ॥
महोरस्को महेष्वासो गूढजत्रुररिंदमः ।
आजानुबाहुः सुशिराः सुललाटः सुविक्रमः ॥ १० ॥
समः समविभक्ताङ्गः स्निग्धवर्णः प्रतापवान् ।
पीनवक्षा विशालाक्षो लक्ष्मीवान् शुभलक्षणः ॥ ११ ॥
धर्मज्ञः सत्यसंधश्च प्रजानां च हिते रतः ।
यशस्वी ज्ञानसंपन्नः शुचिर्वश्यः समाधिमान् ॥ १२ ॥
प्रजापतिसमः श्रीमान् धाता रिपुनिषूदनः ।
रक्षिता जीवलोकस्य धर्मस्य परिरक्षिता ॥ १३ ॥
रक्षिता स्वस्य धर्मस्य स्वजनस्य च रक्षिता ।
वेदवेदाङ्गतत्त्वज्ञो धनुर्वेदे च निष्ठितः ॥ १४ ॥
सर्वशास्त्रार्थतत्त्वज्ञः स्मृतिमान्प्रतिभानवान् ।
सर्वलोकप्रियः साधुरदीनात्मा विचक्षणः ॥ १५ ॥
सर्वदाभिगतः सद्भिः समुद्र इव सिन्धुभिः ।
आर्यः सर्वसमश्चैव सदैकप्रियदर्शनः ॥ १६ ॥
स च सर्वगुणोपेतः कौसल्यानन्दवर्धनः ।
समुद्र इव गाम्भीर्ये धैर्येण हिमवानिव ॥ १७ ॥
विष्णुना सदृशो वीर्ये सोमवत्प्रियदर्शनः ।
कालाग्निसदृशः क्रोधे क्षमया पृथिवीसमः ॥ १८ ॥
धनदेन समस्त्यागे सत्ये धर्म इवापरः ।
तमेवं गुणसंपन्नं रामं सत्यपराक्रमम् ॥ १९ ॥

संक्षेपरामायणम्—(*Continued*).

ज्येष्ठं श्रेष्ठगुणैर्युक्तं प्रियं दशरथः सुतम् ।
प्रकृतीनां हितैर्युक्तं प्रकृतिप्रियकाम्यया ॥ २० ॥
यौवराज्येन संयोक्तुमैच्छत्प्रीत्या महीपतिः ।
तस्याभिषेकसंभारान्दृष्ट्वा भार्याथ कैकयी ॥ २१ ॥
पूर्वं दत्तवरा देवी वरमेनमयाचत ।
विवासनं च रामस्य भरतस्याभिषेचनम् ॥ २२ ॥
स सत्यवचनाद्राजा धर्मपाशेन संयतः ।
विवासयामास सुतं रामं दशरथः प्रियम् ॥ २३ ॥
स जगाम वनं वीरः प्रतिज्ञामनुपालयन् ।
पितुर्वचननिर्देशात्कैकेय्याः प्रियकारणात् ॥ २४ ॥
तं व्रजन्तं प्रियो भ्राता लक्ष्मणोऽनुजगाम ह ।
स्नेहाद्विनयसंपन्नः सुमित्रानन्दवर्धनः ॥ २५ ॥
भ्रातरं दयितो भ्रातुः सौभ्रात्रमनुदर्शयन् ।
रामस्य दयिता भार्या नित्यं प्राणसमा हिता ॥ २६ ॥
जनकस्य कुले जाता देवमायेव निर्मिता ।
सर्वलक्षणसंपन्ना नारीणामुत्तमा वधूः ॥ २७ ॥
सीताप्यनुगता रामं शशिनं रोहिणी यथा ।
पौरैरनुगतो दूरं पित्रा दशरथेन च ॥ २८ ॥
शृङ्गबेरपुरे सूतं गङ्गाकूले व्यसर्जयत् ।
गुहमासाद्य धर्मात्मा निषादाधिपतिं प्रियम् ॥ २९ ॥
गुहेन सहितो रामो लक्ष्मणेन च सीतया ।
ते वनेन वनं गत्वा नदीस्तीर्त्वा बहूदकाः ॥ ३० ॥

संक्षेपरामायणम्—(*Continued*).

चित्रकूटमनुप्राप्य भरद्वाजस्य शासनात् ।
रम्यमावसथं कृत्वा रममाणा वने त्रयः ॥ ३१ ॥
देवगन्धर्वसंकाशास्तत्र ते न्यवसन्सुखम् ।
चित्रकूटं गते रामे पुत्रशोकातुरस्तदा ॥ ३२ ॥
राजा दशरथः स्वर्गं जगाम विलपन्सुतम् ।
मृते तु तस्मिन्भरतो वसिष्ठप्रमुखैर्द्विजैः ॥ ३३ ॥
नियुज्यमानो राज्याय नैच्छद्राज्यं महाबलः ।
स जगाम वनं वीरो रामपादप्रसादकः ॥ ३४ ॥
गत्वा तु स महात्मानं रामं सत्यपराक्रमम् ।
अयाचद्भ्रातरं राममार्यभावपुरस्कृतः ॥ ३५ ॥
त्वमेव राजा धर्मज्ञ इति रामं वचोऽब्रवीत् ।
रामोऽपि परमोदारः सुमुखः सुमहायशाः ॥ ३६ ॥
न चैच्छत्पितुरादेशाद्राज्यं रामो महाबलः ।
पादुके चास्य राज्याय न्यासं दत्वा पुनः पुनः ॥ ३७ ॥
निवर्तयामास ततो भरतं भरताग्रजः ।
स काममनवाप्यैव रामपादावुपस्पृशन् ॥ ३८ ॥
नन्दिग्रामेऽकरोद्राज्यं रामागमनकाङ्क्षया ।
गते तु भरते श्रीमान् सत्यसन्धो जितेन्द्रियः ॥ ३९ ॥
रामस्तु पुनरालक्ष्य नागरस्य जयस्य च ।
तत्रागमनमेकाग्रो दण्डकान्प्रविवेश ह ॥ ४० ॥

———

## CHAPTER IV—*B*.

# ॥ द्वितीयमञ्जरी ॥

### संक्षेपरामायणम् । (*Continued*).

---

प्रविश्य तु महारण्यं रामो राजीवलोचनः ।
विराधं राक्षसं हत्वा शरभङ्गं ददर्श ह ॥ १ ॥
सुतीक्ष्णं चाप्यगस्त्यं चागस्त्यभ्रातरं तथा ।
अगस्त्यवचनाच्चैव जग्राहैन्द्रं शरासनम् ॥ २ ॥
खड्गं च परमप्रीतस्तूणी चाक्षयसायकौ ।
वसतस्तस्य रामस्य वने वनचरैः सह ॥ ३ ॥
ऋषयोऽभ्यागमन्सर्वे वधायासुरराक्षसाम् ।
स तेषां प्रतिशुश्राव राक्षसानां तथा वने ॥ ४ ॥
प्रतिज्ञातश्च रामेण वधः संयतिरक्षसाम् ।
ऋषीणामग्निकल्पानां दण्डकारण्यवासिनाम् ॥ ५ ॥
तेन तत्रैव वसता जनस्थाननिवासिनी ।
विरूपिता शूर्पणखा राक्षसी कामरूपिणी ॥ ६ ॥
ततः शूर्पणखावाक्यादुद्युक्तान्सर्वराक्षसान् ।
खरं च त्रिशिरसं चैव दूषणं चैव राक्षसम् ॥ ७ ॥
निजघान रणे रामस्तेषां चैव पदानुगान् ।
वने तस्मिन्निवसता जनस्थाननिवासिनाम् ॥ ८ ॥

संक्षेपरामायणम् — (*Continued*).

रक्षसां निहतान्यासन् सहस्राणि चतुर्दश ।
ततो ज्ञातिवधं श्रुत्वा रावणः क्रोधमूर्छितः ॥ ९ ॥
सहायं वरयामास मारीचं नाम राक्षसम् ।
वार्यमाणः सुबहुशो मारीचेन स रावणः ॥ १० ॥
न विरोधो बलवता क्षमो रावण तेन ते ।
अनादृत्य तु तद्वाक्यं रावणः कालचोदितः ॥ ११ ॥
जगाम सहमारीचस्तस्याश्रमपदं तदा ।
तेन मायाविना दूरमपवाह्य नृपात्मजौ ॥ १२ ॥
जहार भार्यां रामस्य गृध्रं हत्वा जटायुषम् ।
गृध्रं च निहतं दृष्ट्वा हृतां श्रुत्वा च मैथिलीम् ॥ १३ ॥
राघवः शोकसंतप्तो विललापाकुलेन्द्रियः ।
ततस्तेनैव शोकेन गृध्रं दग्ध्वा जटायुषम् ॥ १४ ॥
मार्गमाणो वने सीतां राक्षसं संददर्श ह ।
कबन्धं नाम रूपेण विकृतं घोरदर्शनम् ॥ १५ ॥
तं निहत्य महाबाहुर्ददाह स्वर्गतश्च सः ।
स चास्य कथयामास शबरीं धर्मचारिणीम् ॥ १६ ॥
श्रमणीं धर्मनिपुणामभिगच्छेति राघव ।
सोऽभ्यगच्छन्महातेजाः शबरीं शत्रुसूदनः ॥ १७ ॥
शबर्या पूजितः सम्यग्रामो दशरथात्मजः ।
पम्पातीरे हनुमता संगतो वानरेण ह ॥ १८ ॥
हनुमद्वचनाच्चैव सुग्रीवेण समागतः ।
सुग्रीवाय च तत्सर्वं शंसद्रामो माहाबलः ॥ १९ ॥

संक्षेपरामायणम्—(*Continued*).

आदितस्तद्यथावृत्तं सीतायाश्च विशेषतः ।
सुग्रीवश्चापि तत्सर्वं श्रुत्वा रामस्य वानरः ॥ २० ॥
चकार सख्यं रामेण प्रीतश्चैवाग्निसाक्षिकम् ।
ततो वानरराजेन वैरानुकथनं प्रति ॥ २१ ॥
रामायावेदितं सर्वं प्रणयाद्दुःखितेन च ।
प्रतिज्ञातं च रामेण तदा वालिवधं प्रति ॥ २२ ॥
वालिनश्च बलं तत्र कथयामास वानरः ।
सुग्रीवः शङ्कितश्चासीन्नित्यं वीर्येण राघवे ॥ २३ ॥
राघवप्रत्ययार्थं तु दुन्दुभेः कायमुत्तमम् ।
दर्शयामास सुग्रीवो महापर्वतसंनिभम् ॥ २४ ॥
उत्स्मयित्वा महाबाहुः प्रेक्ष्य चास्थि महाबलः ।
पादाङ्गुष्ठेन चिक्षेप संपूर्णं दशयोजनम् ॥ २५ ॥
बिभेद च पुनः सालान्सप्तैकेन महेषुणा ।
गिरिं रसातलं चैव जनयन्प्रत्ययं तदा ॥ २६ ॥
ततः प्रीतमनास्तेन विश्वस्तः स महाकपिः ।
किष्किन्धां रामसहितो जगाम च गुहां तदा ॥ २७ ॥
ततोऽगर्जद्धरिवरः सुग्रीवो हेमपिङ्गलः ।
तेन नादेन महता निर्जगाम हरीश्वरः ॥ २८ ॥
अनुमान्य तदा तारां सुग्रीवेण समागतः ।
निजघान च तत्रैनं शरेणैकेन राघवः ॥ २९ ॥
ततः सुग्रीववचनाद्धत्वा वालिनमाहवे ।
सुग्रीवमेव तद्राज्ये राघवः प्रत्यपादयत् ॥ ३० ॥

संक्षेपरामायणम्—(*Continued*).

स च सर्वान्समानीय वानरान्वानरर्षभः ।
दिशः प्रस्थापयामास दिदृक्षुर्जनकात्मजाम् ॥ ३१ ॥
ततो गृध्रस्य वचनात्संपातेर्हनुमान्बली ।
शतयोजनविस्तीर्णं पुप्लुवे लवणार्णवम् ॥ ३२ ॥
तत्र लङ्कां समासाद्य पुरीं रावणपालिताम् ।
ददर्श सीतां ध्यायन्तीमशोकवनिकागताम् ॥ ३३ ॥
निवेदयित्वाभिज्ञानं प्रवृत्तिं विनिवेद्य च ।
समाश्वास्य च वैदेहीं मर्दयामास तोरणम् ॥ ३४ ॥
पञ्च सेनाग्रगान्हत्वा सप्त मन्त्रिसुतानपि ।
कुमारमक्षं निष्पिष्य ग्रहणं समुपागमत् ॥ ३५ ॥
अस्त्रेणोन्मुक्तमात्मानं ज्ञात्वा पैतामहाद्वरात् ।
मर्षयन्राक्षसान्वीरो मन्त्रिणस्तान्यदृच्छया ॥ ३६ ॥
ततो दग्ध्वा पुरीं लङ्कां ऋते सीतां च मैथिलीम् ।
रामाय प्रियमाख्यातुं पुनरायान्महाकपिः ॥ ३७ ॥
सोऽभिगम्य महात्मानं कृत्वा रामं प्रदक्षिणम् ।
न्यवेदयदमेयात्मा दृष्टा सीतेति तत्त्वतः ॥ ३८ ॥
ततः सुग्रीवसहितो गत्वा तीरं महोदधेः ।
समुद्रं क्षोभयामास शरैरादित्यसंनिभैः ॥ ३९ ॥
दर्शयामास चात्मानं समुद्रः सरितां पतिः ।
समुद्रवचनाच्चैव नलं सेतुमकारयत् ॥ ४० ॥
तेन गत्वा पुरीं लङ्कां हत्वा रावणमाहवे ।
रामः सीतामनुप्राप्य परां व्रीडामुपागमत् ॥ ४१ ॥

संक्षेपरामायणम्— *Continued*).

तामुवाच ततो रामः परुषं जनसंसदि ।
अमृष्यमाणा सा सीता विवेश ज्वलनं सती ॥ ४२ ॥
ततोऽग्निवचनात्सीतां ज्ञात्वा विगतकल्मषाम् ।
कर्मणा तेन महता त्रैलोक्यं सचराचरम् ॥ ४३ ॥
सदेवर्षिगणं तुष्टं राघवस्य महात्मनः ।
बभौ रामः संप्रहृष्टः पूजितः सर्वदैवतैः ॥ ४४ ॥
अभिषिच्य च लङ्कायां राक्षसेन्द्रं विभीषणम् ।
कृतकृत्यस्तदा रामो विज्वरः प्रमुमोद ह ॥ ४५ ॥
देवताभ्यो वरं प्राप्य समुत्थाप्य च वानरान् ।
अयोध्यां प्रस्थितो रामः पुष्पकेण सुहृद्वृतः ॥ ४६ ॥
भरद्वाजाश्रमं गत्वा रामः सत्यपराक्रमः ।
भरतस्यान्तिकं रामो हनूमन्तं व्यसर्जयत् ॥ ४७ ॥
पुनराख्यायिकां जल्पन्सुग्रीवसहितस्तदा ।
पुष्पकं तत्समारुह्य नन्दिग्रामं ययौ तदा ॥ ४८ ॥
नन्दिग्रामे जटां हित्वा भ्रातृभिः सहितोऽनघः ।
रामः सीतामनुप्राप्य राज्यं पुनरवाप्तवान् ॥ ४९ ॥
प्रहृष्टमुदितो लोकस्तुष्टः पुष्टः सुधार्मिकः ।
निरामयो ह्यरोगश्च दुर्भिक्षभयवर्जितः ॥ ५० ॥
न पुत्रमरणं किंचिद्द्रक्ष्यन्ति पुरुषाः क्वचित् ।
नार्यश्चाविधवा नित्यं भविष्यन्ति पतिव्रताः ॥ ५१ ॥
न चाग्निजं भयं किंचिन्नाप्सु मज्जन्ति जन्तवः ।
न वातजं भयं किंचिन्नापि ज्वरकृतं तथा ॥ ५२ ॥

संक्षेपरामायणं—(*Concluded*)

न चापि क्षुद्भयं तत्र न तस्करभयं तथा ।
नगराणि च राष्ट्राणि धनधान्ययुतानि च ॥ ५३ ॥
नित्यं प्रमुदिताः सर्वे यथा कृतयुगे तथा ।
अश्वमेधशतैरिष्ट्वा तथा बहुसुवर्णकैः ॥ ५४ ॥
गवां कोट्ययुतं दत्वा विद्वद्भ्यो विधिपूर्वकम् ।
असंख्येयं धनं दत्वा ब्राह्मणेभ्यो महायशाः ॥ ५५ ॥
राजवंशाञ्छतगुणान्स्थापयिष्याति राघवः ।
चातुर्वर्ण्यं च लोकेऽस्मिन्स्वे स्वे धर्मे नियोक्ष्यति ॥ ५६ ॥
दशवर्षसहस्राणि दशवर्षशतानि च ।
रामो राज्यमुपासित्वा ब्रह्मलोकं प्रयास्यति ॥ ५७ ॥
इदं पवित्रं पापघ्नं पुण्यं वेदैश्च संमितम् ।
यः पठेद्रामचरितं सर्वपापैः प्रमुच्यते ॥ ५८ ॥
एतदाख्यानमायुष्यं पठन्रामायणं नरः ।
सपुत्रपौत्रः सगणः प्रेत्यस्वर्गे महीयते ॥ ५९ ॥
पठन्द्विजो वागृषभत्वमीयात्स्यात्क्षत्रियो भूमिपतित्वमीयात् ।
वणिग्जनः पण्यफलत्वमीयात् जनश्च शूद्रोऽपि महत्वमीयात् ॥ ६० ॥

इति संक्षेपरामायणम् समाप्तम् ।

---

## CHAPTER V.

# संख्यावाचकशब्दाः । CARDINALS.

एकः
द्वौ
त्रयः
चत्वारः
पञ्च
षट्
सप्त
अष्ट
नव
दश
एकादश
द्वादश
त्रयोदश
चतुर्दश
पञ्चदश
षोडश
सप्तदश
अष्टादश
एकोनविंशतिः
विंशतिः
एकविंशतिः

द्वाविंशतिः
त्रयोविंशतिः
चतुर्विंशतिः
पञ्चविंशतिः
षड्विंशतिः
सप्तविंशतिः
अष्टविंशतिः
एकोनत्रिंशत्
त्रिंशत्
एकत्रिंशत्
द्वात्रिंशत्
त्रयस्त्रिंशत्
चतुस्त्रिंशत्
पञ्चत्रिंशत्
षट्त्रिंशत्
सप्तत्रिंशत्
अष्टत्रिंशत्
एकोनचत्वारिंशत्
चत्वारिंशत्
एकचत्वारिंशत्
द्विचत्वारिंशत्

त्रिचत्वारिंशत्
चतुश्चत्वारिंशत्
पञ्चचत्वारिंशत्
षट्चत्वारिंशत्
सप्तचत्वारिंशत्
अष्टचत्वारिंशत्
एकोनपञ्चाशत्
पञ्चाशत्
एकपञ्चाशत्
द्विपञ्चाशत्
त्रिपञ्चाशत्
चतुष्पञ्चाशत्
पञ्चपञ्चाशत्
षट्पञ्चाशत्
सप्तपञ्चाशत्
अष्टपञ्चाशत्
एकोनषष्टिः
षष्टिः
एकषष्टिः
द्विषष्टिः
त्रिषष्टिः

चतुष्षष्टिः
पञ्चषष्टिः
षट्षष्टिः
सप्तषष्टिः
अष्टषष्टिः
एकोनसप्ततिः
सप्ततिः
एकसप्ततिः
द्विसप्ततिः
त्रिसप्ततिः
चतुस्सप्ततिः
पञ्चसप्ततिः
षट्सप्ततिः
सप्तसप्ततिः
अष्टसप्ततिः
एकोनाशीतिः
अशीतिः
एकाशीतिः
द्व्यशीतिः
त्र्यशीतिः
चतुरशीतिः

संख्यावाचकशब्दाः—(*Concluded*).

| | | | |
|---|---|---|---|
| पञ्चाशीतिः | द्विनवतिः | एकोनशतम् | सप्तशतं |
| षडशीतिः | त्रिनवतिः | शतम् | अष्टशतं |
| सप्ताशीतिः | चतुर्नवतिः | द्विशतम् | नवशतं |
| अष्टाशीतिः | पञ्चनवतिः | त्रिशतं | सहस्रं |
| एकोननवतिः | षण्णवतिः | चतुश्शतं | अयुतं |
| नवतिः | सप्तनवतिः | पञ्चशतं | लक्षम् |
| एकनवतिः | अष्टनवतिः | षट्शतं | |

---

# ॥ संख्येयवाचकाः ॥

## NUMERALS (ORDINALS).

---

| | | |
|---|---|---|
| १ प्रथमः | १३ त्रयोदशः | २६ षड्विंशः |
| २ द्वितीयः | १४ चतुर्दशः | २७ सप्तविंशः |
| ३ तृतीयः | १५ पञ्चदशः | २८ अष्टाविंशः |
| ४ { चतुर्थः / तुरीयः—तुर्यः | १६ षोडशः | २९ एकोनत्रिंशः |
| | १७ सप्तदशः | ३० त्रिंशः |
| ५ पञ्चमः | १८ अष्टादशः | ३१ एकत्रिंशः |
| ६ षष्ठः | १९ एकोनविंशः | ३२ द्वात्रिंशः |
| ७ सप्तमः | २० विंशः | ३३ त्रयस्त्रिंशः |
| ८ अष्टमः | २१ एकविंशः | ३४ चतुस्त्रिंशः |
| ९ नवमः | २२ द्वाविंशः | ३५ पञ्चत्रिंशः |
| १० दशमः | २३ त्रयोविंशः | ३६ षट्त्रिंशः |
| ११ एकादशः | २४ चतुर्विंशः | ३७ सप्तत्रिंशः |
| १२ द्वादशः | २५ पञ्चविंशः | ३८ अष्टत्रिंशः |

संख्येयवाचका:—(*Continued*).

३९ एकोनचत्वारिंश:
४० चत्वारिंश:
४१ एकचत्वारिंश:
४२ द्विचत्वारिंश: / द्वाचत्वारिंश:
४३ त्रिचत्वारिंश: / त्रयश्चत्त्वारिंश:
४४ चतुश्चत्वारिंश:
४५ पञ्चचत्वारिंश:
४६ षट्चत्वारिंश:
४७ सप्तचत्वारिंश:
४८ अष्टचत्वारिंश: / अष्टाचत्वारिंश:
४९ एकोनपञ्चाश:
५० पञ्चाश:
५१ एकपञ्चाश:
५२ द्विपञ्चाश: / द्वापञ्चाश:
५३ त्रिपञ्चाश: / त्रय:पञ्चाश:
५४ चतु:पञ्चाश:
५५ पञ्चपञ्चाश:
५६ षट्पञ्चाश:
५७ सप्तपञ्चाश:
५८ अष्टपञ्चाश: / अष्टापञ्चाश:

५९ एकोनषष्टितम:
६० षष्टितम:
६१ एकषष्टितम:
६२ द्विषष्टितम: / द्वाषष्टितम:
६३ त्रिषष्टितम: / त्रयष्षष्टितम:
६४ चतुष्षष्टितम:
३५ पञ्चषष्टितम:
६६ षट्षष्टितम:
६७ सप्तषष्टितम:
६८ अष्टषष्टितम: / अष्टाषष्टितम:
६९ एकोनसप्ततितम:
७० सप्ततितम:
७१ एकसप्ततितम:
७२ द्विसप्ततितम: / द्वासप्ततितम:
७३ त्रिसप्ततितम: / त्रयस्सप्ततितम:
७४ चतुस्सप्ततितम:
७५ पञ्चसप्ततितम:
७६ षट्सप्ततितम:
७७ सप्तसप्ततितम:
७८ अष्टसप्ततितम: / अष्टासप्ततितम:

७९ एकोनाशीतितम:
८० अशीतितम:
८१ एकाशीतितम:
८२ द्व्यशीतितम: / द्वाशीतितम:
८३ त्र्यशीतितम: / त्रयोशीतितम:
८४ चतुरशीतितम:
८५ पञ्चाशीतितम:
८६ षडर्श तितम:
८७ सप्ताशीतितम:
८८ अष्टाशीतितम:
८९ एकोननवतितम:
९० नवतितम:
९१ एकनवतितम:
९२ द्विनवतितम: / द्वानवतितम:
९३ त्रिनवतितम: / त्रयोनवतितम:
९४ चतुर्नवतितम:
९५ पञ्चनवतितम:
९६ षण्णवतितम:
९७ सप्तनवतितम:
९८ अष्टनवतितम: / अष्टानवतितम:
९९ एकोनशततम:

संख्येयवाचकाः—(*Concluded*).

१०० शततमः
१०१ एकोत्तरशततमः
१०२ द्व्युत्तरशततमः
१०३ त्र्युत्तरशततमः
१०४ चतुरुत्तरशततमः
१०५ पञ्चोत्तरशततमः
१०६ षडुत्तरशततमः
१०७ सप्तोत्तरशततमः
१०८ अष्टोत्तरशततमः
१०९ नवोत्तरशततमः
११० दशोत्तरशततमः
१११ एकादशोत्तर-शततमः
११२ द्वादशोत्तरशततमः
११३ त्रयोदशोत्तर-शततमः
११४ चतुर्दशोत्तर-शततमः
११५ पञ्चदशोत्तर-शततमः
११६ षोडशोत्तरशततमः
११७ सप्तदशोत्तर-शततमः
११८ अष्टादशोत्तर-शततमः
११९ एकोनविंशत्युत्तर-शततमः
१२० विंशत्युत्तरशततमः
एवमेवानुमेयम्

---

## प्रयोगाः ।

## VOICES.

1. अकर्मकप्रयोगः = Intransitive.—नारायणः प्रकाशते ।

2. सकर्मकप्रयोगः = Transitive.—आचार्यः शिष्यम् अनुगृह्णाति ।

3. द्विकर्मकप्रयोगः = Verbs governing two objects.—गोपो गां पयः दोग्धि.

4. कर्मणि प्रयोगः = Passive.—आचार्येण शिष्यः अनुगृह्यते.

5. भावे प्रयोगः = Impersonal use of verbs.—वरुणेन भूयते.

6. द्विकर्मकर्मणि प्रयोगः = Passive of transitive verbs with two objects.—विष्णुना बलिः पाताललोकं प्रापितः ।

## उपसर्गाः ।

## UPASARGAS.

प्र, परा, अप, सम्, अनु, अव, निस्, निर्, दुस्, दुर्, वि, आङ्, नि, अधि, अपि, अति, सु, उत्, अभि, प्रति, परि, उप, एते प्रादयः ।

उपसर्गेण धात्वर्थो बलादन्यत्र नीयते ।
प्रहाराहारसंहारविहारपरिहारवत् ॥

The sense of roots is modified by the addition of Upasargas.

प्रहार (from हृ with प्र) = beating.
आहार (from हृ with आं) = food.
संहार (from हृ with सम्) = killing.
विहार (from हृ with वि) = play.
परिहार (from हृ with परि) = remedy.
अनुगच्छति (from गम् with अनु) = follows.
अवगच्छति (from गम् with अव) = knows.
संलाप (from लप् with सम्) = pleasant conversation.
प्रलाप (from लप् with प्र) = prattle.
विलाप (from लप् with वि) = lament.
विप्रलाप (from लप् with प्र & वि) = speaking against.

वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः ।
आपं चैव हलन्तानां यथा वाचा निशा दिशा ॥

अव, अपि, एतयोः उपसर्गयोः आद्याकारः लुप्यते हलन्तानां शब्दानां स्त्रियाम् आकारश्च अन्ते अनुषञ्जनीयः इति भागुरिराचार्यः मन्यते ।

Grammarian Bhaguri says that the initial अ of the prepositions अव and अपि is dropped, and that आ is to be affixed at the end of Feminine Gender words ending in a consonant.

*Examples :*—अवगाहः—वगाहः; अपिधानम्—पिधानम्; वाक्—वाचा; निट्—निशा; दिक्—दिशा।

## अकर्मकसकर्मकधातुविवरणम्।

## TRANSITIVE AND INTRANSITIVE.

" वृद्धिक्षयभयजीवितमरणं लज्जासत्तास्थितिजागरणम्।
कौटिल्यौत्सुक्यभ्रमयत्नग्लानिजरासामर्थ्यक्षरणम्॥
शान्तिध्वनिमज्जनवैकल्यं जृम्भणदम्भनरोदनहसनम्।
शयनक्रीडारुचिदीप्त्यर्थं धातुगणन्तमकर्मकमाहुः॥ "

प्रायेण अधोलिखितधातवः तत्समानार्थकधातवश्च अकर्मकाः इतरे तु सकर्मका इत्यवगन्तव्यम्।

Generally, verbs given below and those having the same sense as these, are non-object-bearing ones (*i.e.*), Intransitive in character, while the rest are object-bearing verbs (*i.e.*), Transitive ones.

| ROOTS. | FORMS. | MEANINGS. |
|---|---|---|
| वृध् | वर्धते | Increases. |
| क्षि | क्षयति | Wastes. |
| भी | बिभेति | Is afraid. |
| जीव् | जीवति | Lives. |
| मृ | म्रियते | Dies. |
| लज्ज् | लज्जते | Is ashamed. |

| ROOTS. | FORMS. | MEANINGS. |
| --- | --- | --- |
| भू | भवति | Is. |
| स्था | तिष्ठति | Stands. |
| जागृ | जागर्ति | Awakes. |
| कुट् | कुटति | Is crooked. |
| कठि | उत्कंठते | Longs. |
| भ्रम् | भ्राम्यति | Roams about. |
| यत् | यतते | Strives. |
| ग्लै | ग्लायति | Is weary. |
| जॄ | जीर्यते | Becomes old. |
| क्लृप् | कल्पते | Is able. |
| च्युत् | च्योतति | Slips. |
| शम् | शाम्यति | Is calm. |
| ध्वन् | ध्वनति | Sounds. |
| मज्ज् | मज्जति | Sinks. |
| कद् | कदते | Is void. |
| जृम्भ् | जृम्भते | Yawns. |
| दंभि | दम्भयति | Is proud. |
| रुद् | रोदिति | Weeps or cries. |
| हस् | हसति | Laughs. |
| शीं | शेते | Lies. |
| क्रीड् | क्रीडति | Plays. |
| रुच् | रोचते | Looks beautiful. |
| इन्ध् | इन्धते | Is bright. |

CHAPTER VI.

# ॥ सुबन्तरूपाणि ॥

---

## THE DECLENSION OF SANSKRIT NOUNS.

1. स्वौजसमौट् छष्टाभ्याम्भिस् ङेभ्यांभ्यस् ङसिभ्यांभ्यस् ङसोसाम् ङ्योस् सुप्. 2. विभक्तिश्च. 3. सुपः. 4. द्व्येकयोर्द्विवचनैकवचने. 5. बहुषु-बहुवचनम् ।

| एकवचनम्. Singular. | द्विवचनम्. Dual. | बहुवचनम्. Plural. | | |
|---|---|---|---|---|
| सु (स्) | औ | जस्(अस्) | प्रथमाविभक्तिः<br>संबोधन प्रथमाविभक्तिः | Nominative case.<br>Vocative case. |
| अम् | औट्(औ) | शस्(अस्) | द्वितीया विभक्तिः | Accusative case. |
| टा(आ) | भ्याम् | भिस् | तृतीया विभक्तिः | Instrumental case. |
| ङे (ए) | भ्याम् | भ्यस् | चतुर्थी विभक्तिः | Dative case. |
| ङसि(अस्) | भ्याम् | भ्यस् | पञ्चमी विभक्तिः | Ablative case. |
| ङस्(अस्) | ओस् | आम् | षष्ठी विभक्तिः | Genitive case. |
| ङि (इ) | ओस् | सुप् (सु) | सप्तमी विभक्तिः | Locative case. |

| Masculine gender. | Feminine gender. | Neuter gender. |
|---|---|---|
| पुल्लिङ्गम् | स्त्रीलिङ्गम् | नपुंसकलिङ्गम् |

एते प्रत्ययाः सुप इत्युच्यन्ते एतदन्तानि प्रातिपदिकानि सुबन्तानीति कथ्यन्ते तेषु प्रत्ययेषु केचित् विविधेभ्यः प्रातिपदिकेभ्यः रूपान्तराणि प्रतिपद्यन्ते लिङ्गभेदे च भिद्यन्ते गैर्वाण्यां भाषायाम् प्रायशः लिङ्गानि अमरकोशादिभ्यः वेद्यानि नत्वर्थनिबन्धनानि ।

These are the suffixes used for the declension of noun bases. Of these some undergo changes in relation to the bases to which they are added and some vary in regard to the genders of bases.

In Sanskrit gender generally does not depend upon sex and therefore the genders of bases have to be learnt mainly from lexicons like Amarakosa &c.

*Examples :—*

अकारान्तः पुल्लिङ्गो 'राम' शब्दः ।

| | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा. | रामः | रामौ | रामाः |
| द्वितीया. | रामम् | रामौ | रामान् |
| तृतीया. | रामेण | रामाभ्याम् | रामैः |
| चतुर्थी. | रामाय | रामाभ्याम् | रामेभ्यः |
| पञ्चमी. | रामात् | रामाभ्याम् | रामेभ्यः |
| षष्ठी. | रामस्य | रामयोः | रामाणाम् |
| सप्तमी. | रामे | रामयोः | रामेषु |
| सम्बोधनम्. | हे राम | हे रामौ | हे रामाः |

एवं कृष्ण, मुकुन्दादयः ।

(२) इकारान्तः पुल्लिङ्गो 'हरि' शब्दः ।

| | | | |
|---|---|---|---|
| प्र. | हरिः | हरी | हरयः |
| द्वि. | हरिं | हरी | हरीन् |
| तृ. | हरिणा | हरिभ्याम् | हरिभिः |
| च. | हरये | हरिभ्याम् | हरिभ्यः |
| पं. | हरेः | हरिभ्याम् | हरिभ्यः |

‘हरि’ शब्दः—(*Concluded*).

| | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| ष. | हरेः | हर्योः | हरीणाम् |
| स. | हरौ | हर्योः | हरिषु |
| सं. | हे हरे | हे हरी | हे हरयः |

एवं श्रीपति, अग्नि, रवि, कव्यादयः ।

## (३) इकारान्तः पुल्लिङ्गः ‘पति’ शब्दः ।

| | | | |
|---|---|---|---|
| प्र. | पतिः | पती | पतयः |
| द्वि. | पतिं | पती | पतीन् |
| तृ. | पत्या | पतिभ्याम् | पतिभिः |
| च. | पत्ये | पतिभ्याम् | पतिभ्यः |
| पं. | पत्युः | पतिभ्याम् | पतिभ्यः |
| ष. | पत्युः | पत्योः | पतीनाम् |
| स. | पत्यौ | पत्योः | पतिषु |
| सं. | हे पते | हे पती | हे पतयः |

## (४) इकारान्तः पुल्लिङ्गः ‘सखि’ शब्दः ।

| | | | |
|---|---|---|---|
| प्र. | सखा | सखायौ | सखायः |
| द्वि. | सखायम् | सखायौ | सखीन् |
| तृ. | सख्या | सखिभ्याम् | सखिभिः |
| च. | सख्ये | सखिभ्याम् | सखिभ्यः |
| पं. | सख्युः | सखिभ्याम् | सखिभ्यः |
| ष. | सख्युः | सख्योः | सखीनाम् |
| स. | सख्यौ | सख्योः | सखिषु |
| सं. | हे सखे | हे सखायौ | हे सखायः |

(५) उकारान्तः पुल्लिङ्गो 'गुरु' शब्दः ।

| | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्र. | गुरुः | गुरू | गुरवः |
| द्वि. | गुरुम् | गुरू | गुरून् |
| तृ. | गुरुणा | गुरुभ्याम् | गुरुभिः |
| च. | गुरवे | गुरुभ्याम् | गुरुभ्यः |
| पं. | गुरोः | गुरुभ्याम् | गुरुभ्यः |
| ष. | गुरोः | गुर्वोः | गुरूणाम् |
| स. | गुरौ | गुर्वोः | गुरुषु |
| सं. | हे गुरो | हे गुरू | हे गुरवः |

एवं विष्णु, वायु, भान्वादयः ।

(६) ऊकारान्तः पुल्लिङ्गः 'स्वभू' शब्दः ।

| | | | |
|---|---|---|---|
| प्र. | स्वभूः | स्वभुवौ | स्वभुवः |
| द्वि. | स्वभुवम् | स्वभुवौ | स्वभुवः |
| तृ. | स्वभुवा | स्वभूभ्याम् | स्वभूभिः |
| च. | स्वभुवे | स्वभूभ्याम् | स्वभूभ्यः |
| पं. | स्वभुवः | स्वभूभ्याम् | स्वभूभ्यः |
| ष. | स्वभुवः | स्वभुवोः | स्वभुवाम् |
| स. | स्वभुवि | स्वभुवोः | स्वभूषु |
| सं. | हे स्वभूः | हे स्वभुवौ | हे स्वभुवः |

एवं कटप्रू, स्वयंभू, प्रभृतयः ।

(७) ऋकारान्तः पुल्लिङ्गो 'धातृ' शब्दः

| | | | |
|---|---|---|---|
| प्र. | धाता | धातारौ | धातारः |
| द्वि. | धातारम् | धातारौ | धातॄन् |

'धातृ' शब्दः—(*Concluded*).

| | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| तृ. | धात्रा | धातृभ्याम् | धातृभिः |
| च. | धात्रे | धातृभ्याम् | धातृभ्यः |
| पं. | धातुः | धातृभ्याम् | धातृभ्यः |
| ष. | धातुः | धात्रोः | धातॄणाम् |
| स. | धातरि | धात्रोः | धातृषु |
| सं. | हे धातः | हे धातारौ | हे धातारः |

एवं नप्तृ, शास्तृ, उद्गातृ, कर्तृ, इत्यादयः ।

### (८) ऋकारान्तः पुल्लिङ्गः 'पितृ शब्दः ।

| | | | |
|---|---|---|---|
| प्र. | पिता | पितरौ | पितरः |
| द्वि. | पितरम् | पितरौ | पितॄन् |
| सं. | हे पितः | हे पितरौ | हे पितरः |

शेषं धातृ (७) शब्दवत् ।

एवं जामातृ, भ्रातृ, देवृ, शंस्तृ, सव्येष्ठृ, नृ, शब्दाः ।

### (९) ऐकारान्तः पुल्लिङ्गो 'रै' शब्दः ।

| | | | |
|---|---|---|---|
| प्र. सं. | राः | रायौ | रायः |
| द्वि. | रायम् | रायौ | रायः |
| तृ. | राया | राभ्याम् | राभिः |
| च. | राये | राभ्याम् | राभ्यः |
| पं. | रायः | राभ्याम् | राभ्यः |
| ष. | रायः | रायोः | रायाम् |
| स. | रायि | रायोः | रासु |

## (१०) ओकारान्तः पुल्लिङ्गो 'गो' शब्दः ।

| | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्र. सं. | गौः | गावौ | गावः |
| द्वि. | गाम् | गावौ | गाः |
| तृ. | गवा | गोभ्याम् | गोभिः |
| च. | गवे | गोभ्याम् | गोभ्यः |
| पं. | गोः | गोभ्याम् | गोभ्यः |
| ष. | गोः | गवोः | गवाम् |
| स | गवि | गवोः | गोषु |

## (११) औकारान्तः पुल्लिङ्गो 'ग्लौ' शब्दः ।

| | | | |
|---|---|---|---|
| प्र. सं. | ग्लौः | ग्लावौ | ग्लावः |
| द्वि. | ग्लावम् | ग्लावौ | ग्लावः |
| तृ. | ग्लावा | ग्लौभ्याम् | ग्लौभिः |
| च. | ग्लावे | ग्लौभ्याम् | ग्लौभ्यः |
| पं. | ग्लावः | ग्लौभ्याम् | ग्लौभ्यः |
| ष. | ग्लावः | ग्लावोः | ग्लावाम् |
| स. | ग्लावि | ग्लावोः | ग्लौषु |

इत्यजन्ताः पुल्लिङ्गाः ।

---

# अथाजन्तस्त्रीलिङ्गसाधारणशब्दाः ।

---

आ (१२) अकारान्तः स्त्रीलिङ्गो 'रमा' शब्दः ।

| | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्र. | रमा | रमे | रमाः |
| द्वि. | रमाम् | रमे | रमाः |
| तृ. | रमया | रमाभ्याम् | रमाभिः |
| च. | रमायै | रमाभ्याम् | रमाभ्यः |
| पं. | रमायाः | रमाभ्याम् | रमाभ्यः |
| ष. | रमायाः | रमयोः | रमाणाम् |
| स. | रमायाम् | रमयोः | रमासु |
| सं. | हे रमे | हे रमे | हे रमाः |

एवं सीता, दुर्गा, क्षमा, इत्यादयः ।

(१३) इकारान्तः स्त्रीलिङ्गो 'मति' शब्दः ।

| | | | |
|---|---|---|---|
| प्र. | मतिः | मती | मतयः |
| द्वि. | मतिम् | मती | मतीः |
| तृ. | मत्या | मतिभ्याम् | मतिभिः |
| च. | मत्यै, मतये | मतिभ्याम् | मतिभ्यः |
| पं. | मत्याः, मतेः | मतिभ्याम् | मतिभ्यः |
| ष. | मत्याः, मतेः | मत्योः | मतीनाम् |
| स. | मत्याम्, मतौ | मत्योः | मतिषु |
| सं. | हे मते | हे मती | हे मतयः |

एवं श्रुति, स्मृति, बुद्धि इत्यादयः

(१४) ईकारान्तः स्त्रीलिङ्गो 'गौरी' शब्दः ।

| | एकवचनम् | द्विवचनम् | वहुवचनम् |
|---|---|---|---|
| प्र. | गौरी | गौर्यौ | गौर्यः |
| द्वि. | गौरीम् | गौर्यौ | गौरीः |
| तृ. | गौर्या | गौरीभ्याम् | गौरीभिः |
| च. | गौर्यै | गौरीभ्याम् | गौरीभ्यः |
| पं. | गौर्याः | गौरीभ्याम् | गौरीभ्यः |
| ष. | गौर्याः | गौर्योः | गौरीणाम् |
| स. | गौर्याम् | गौर्योः | गौरीषु |
| सं. | हे गौरि | हे गौर्यौ | हे गौर्यः |

(१५) ईकारान्तः स्त्रीलिङ्गः 'स्त्री' शब्दः ।

| | | | |
|---|---|---|---|
| प्र. | स्त्री | स्त्रियौ | स्त्रियः |
| द्वि. | स्त्रियम्, स्त्रीम् | स्त्रियौ | स्त्रियः, स्त्रीः |
| तृ. | स्त्रिया | स्त्रीभ्याम् | स्त्रीभिः |
| च. | स्त्रियै | स्त्रीभ्याम् | स्त्रीभ्यः |
| पं. | स्त्रियाः | स्त्रीभ्याम् | स्त्रीभ्यः |
| ष. | स्त्रियाः | स्त्रियोः | स्त्रीणाम् |
| स. | स्त्रियाम् | स्त्रियोः | स्त्रीषु |
| सं. | हे स्त्रि | हे स्त्रियौ | हे स्त्रियः |

(१६) ईकारान्तः स्त्रीलिङ्गः 'श्री' शब्दः ।

| | | | |
|---|---|---|---|
| प्र. सं. | श्रीः | श्रियौ | श्रियः |
| द्वि. | श्रियम् | श्रियौ | श्रियः |
| तृ. | श्रिया | श्रीभ्याम् | श्रीभिः |

'श्री' शब्दः—(*Concluded*).

| | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| च. | श्रियै, श्रिये | श्रीभ्याम् | श्रीभ्यः |
| पं. | श्रियाः, श्रियः | श्रीभ्याम् | श्रीभ्यः |
| ष. | श्रियाः, श्रियः | श्रियोः | श्रीणाम्, श्रियाम् |
| स. | श्रियाम्, श्रियि | श्रियोः | श्रीषु |

एवं धी, ह्री, भी, इत्यादयः ।

(१७) उकारान्तः स्त्रीलिङ्गः 'धेनु' शब्दः ।

| | | | |
|---|---|---|---|
| प्र. | धेनुः | धेनू | धेनवः |
| द्वि. | धेनुम् | धेनू | धेनूः |
| तृ. | धेन्वा | धेनुभ्याम् | धेनुभिः |
| च. | धेन्वै, धेनवे | धेनुभ्याम् | धेनुभ्यः |
| पं. | धेन्वाः, धेनोः | धेनुभ्याम् | धेनुभ्यः |
| ष. | धेन्वाः, धेनोः | धेन्वोः | धेनूनाम् |
| स. | धेन्वाम्, धेनौ | धेन्वोः | धेनुषु |
| सं. | हे धेनो | हे धेनू | हे धेनवः |

एवं रज्जु, तनु, हनु, इत्यादयः ।

(१८) ऊकारान्तः स्त्रीलिङ्गो 'वधू' शब्दः ।

| | | | |
|---|---|---|---|
| प्र. | वधूः | वध्वौ | वध्वः |
| द्वि. | वधूम् | वध्वौ | वधूः |
| तृ. | वध्वा | वधूभ्याम् | वधूभिः |
| च. | वध्वै | वधूभ्याम् | वधूभ्यः |
| पं. | वध्वाः | वधूभ्याम् | वधूभ्यः |

'वधू' शब्दः—(*Concluded*).

| | एकवचनम् | द्विवचनम् | वहुवचनम् |
|---|---|---|---|
| ष. | वध्वाः | वध्वोः | वधूनाम् |
| स. | वध्वाम् | वध्वोः | वधूषु |
| सं. | हे वधु | हे वध्वौ | हे वध्वः |

एवं चमू, श्वश्रू, जम्वू इत्यादयः।

(१९) ऊकारान्तः स्त्रीलिङ्गो 'भ्रू' शब्दः।

| | | | |
|---|---|---|---|
| प्र. | भ्रूः | भ्रुवौ | भ्रुवः |
| द्वि. | भ्रुवम् | भ्रुवौ | भ्रुवः |
| तृ. | भ्रुवा | भ्रूभ्याम् | भ्रूभिः |
| च. | भ्रुवै, भ्रुवे | भ्रूभ्याम् | भ्रूभ्यः |
| पं. | भ्रुवाः, भ्रुवः | भ्रूभ्याम् | भ्रूभ्यः |
| ष. | भ्रुवाः, भ्रुवः | भ्रुवोः | भ्रूणाम् |
| स. | भ्रुवाम्, भ्रुवि | भ्रुवोः | भ्रूषु |
| सं | हे भ्रूः | हे भ्रुवौ | हे भ्रुवः |

एवं भू; सुभ्रू इत्यादयः।

(२०) ऋकारान्तः स्त्रीलिङ्गो 'मातृ' शब्दः।

| | | | |
|---|---|---|---|
| प्र. | माता | मातरौ | मातरः |
| द्वि. | मातरम् | मातरौ | मातॄः |
| सं. | हे मातः | हे मातरौ | हे मातरः |

शेषं धातृ (७) शब्दवत्।

एवं दुहितृ, धातृ, ननान्दृ, शब्दाः।

(२१) ऋकारान्तः स्त्रीलिङ्गः 'स्वसृ' शब्दः ।

| | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्र. | स्वसा | स्वसारौ | स्वसारः |
| द्वि. | स्वसारम् | स्वसारौ | स्वसॄः |
| सं. | हे स्वसः | हे स्वसारौ | हे स्वसारः |

शेषं धातृ, (७) शब्दवत् ।

(२२) ओकारान्तः स्त्रीलिङ्गो 'द्यो' शब्दः ।

| | | | |
|---|---|---|---|
| प्र. | द्यौः | द्यावौ | द्यावः |

इत्यादि गो (१०) शब्दवत् ।

(२३) औकारान्तः स्त्रीलिङ्गो 'नौ' शब्दः ।

| | | | |
|---|---|---|---|
| प्र. | नौः | नावौ | नावः |

इत्यादि ग्लौ (१०) शब्दवत्

इत्यजन्ताः स्त्रीलिङ्गाः

# अथाजन्तनपुंसकलिङ्गसाधारणशब्दाः ।

---

(२४) अकारान्त नपुंसकलिङ्गो 'ज्ञान' शब्दः

| | | | |
|---|---|---|---|
| प्र. | ज्ञानम् | ज्ञाने | ज्ञानानि |
| द्वि. | ज्ञानम् | ज्ञाने | ज्ञानानि |
| सं. | हे ज्ञान | हे ज्ञाने | हे ज्ञानानि |

शेषं राम (१) शब्दवत् ।

## (२५) इकारान्त नपुंसकलिङ्गो 'वारि' शब्दः ।

| | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्र. | वारि | वारिणी | वारीणि |
| द्वि. | वारि | वारिणी | वारीणि |
| तृ. | वारिणा | वारिभ्याम् | वारिभिः |
| च. | वारिणे | वारिभ्याम् | वारिभ्यः |
| पं. | वारिणः | वारिभ्याम् | वाविभ्यः |
| ष. | वारिणः | वारिणोः | वारीणाम् |
| स. | वारिणि | वारिणोः | वारिषु |
| सं. | हे वारि | हे वारिणी | हे वारीणि |

## (२६) इकारान्त नपुंसकलिङ्गः 'अनादि' शब्दः ।

| | | | |
|---|---|---|---|
| प्र. | अनादि | अनादिनी | अनादीनि |
| द्वि. | अनादि | अनादिनी | अनादीनि |
| तृ. | अनादिना | अनादिभ्याम् | अनादिभिः |
| च. | अनादिने, अनादये | अनादिभ्याम् | अनादिभ्यः |
| पं. | अनादिनः, अनादेः | अनादिभ्याम् | अनादिभ्यः |
| ष. | अनादिनः<br>अनादेः | अनादिनोः<br>अनाद्योः | अनादीनाम् |
| स. | अनादिनि<br>अनाद्यौ | अनादिनोः<br>अनाद्योः | अनादिषु |
| सं. | हे अनादे<br>हे अनादि | हे अनादिनी | हे अनादीनि |

एवं शुचि, दुर्मति इत्यादयः ।

## (२७) इकारान्त नपुंसकलिङ्गः 'दधि' शब्दः ।

| | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्र. | दधि | दधिनी | दधीनि |
| द्वि. | दधि | दधिनी | दधीनि |
| तृ. | दध्ना | दधिभ्याम् | दधिभिः |
| च. | दध्ने | दधिभ्याम् | दधिभ्यः |
| पं. | दध्नः | दधिभ्याम् | दधिभ्यः |
| ष. | दध्नः | दध्नोः | दध्नाम् |
| स. | दध्नि, दधनि, | दध्नोः | दधिषु |
| सं. | हे दधे, हे दधि | हे दधिनी | हे दधीनि |

एवं अस्थि, सक्थि, अक्षि, शब्दाः ।

## (२८) उकारान्त नपुंसकलिङ्गो 'मधु' शब्दः ।

| | | | |
|---|---|---|---|
| प्र. | मधु | मधुनी | मधूनि |
| द्वि. | मधु | मधुनी | मधूनि |
| तृ. | मधुना | मधुभ्याम् | मधुभिः |
| च. | मधुने | मधुभ्याम् | मधुभ्यः |
| पं. | मधुनः | मधुभ्याम् | मधुभ्यः |
| ष. | मधुनः | मधुनोः | मधूनाम् |
| स. | मधुनि | मधुनोः | मधुषु |
| सं. | हे मधो, हे मधु | हे मधुनी | हे मधूनि |

एवं नप्तृ, वस्तु, जतु, अश्रु इत्यादयः ।

## (२९) ऋकारान्त नपुंसकलिङ्गो 'धातृ' शब्दः ।

| | | | |
|---|---|---|---|
| प्र. | धातृ | धातृणी | धातॄणि |
| द्वि. | धातृ | धातृणी | धातॄणि |

धातृ शब्दः—(Concluded).

| | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| तृ. | धात्रा, धातृणा | धातृभ्याम् | धातृभिः |
| च. | धात्रे, धातृणे | धातृभ्याम् | धातृभ्यः |
| पं. | धातुः, धातृणः | धातृभ्याम् | धातृभ्यः |
| ष. | धातुः, धातृणः | धात्रोः, धातृणोः | धातॄणाम् |
| स. | धातरि, धातृणि | धात्रोः, धातृणोः | धातृषु |
| सं. | हे धातः, हे धातृ | हे धातृणी | हे धातॄणि |

एवं ज्ञातृ, कर्तृ, नेतृ इत्यादयः।

इत्यजन्ताः नपुंसकलिङ्गाः

# अथ हलन्तपुल्लिङ्गसाधारणशब्दाः।

(३०) चकारान्तः पुल्लिङ्गः 'पयोमुच्' शब्दः।

| | | | |
|---|---|---|---|
| प्र. सं. | पयोमुक् | पयोमुचौ | पयोमुचः |
| द्वि. | पयोमुचम् | पयोमुचौ | पयोमुचः |
| तृ. | पयोमुचा | पयोमुग्भ्याम् | पयोमुग्भिः |
| च. | पयोमुचे | पयोमुग्भ्याम् | पयोमुग्भ्यः |
| पं. | पयोमुचः | पयोमुग्भ्याम् | पयोमुग्भ्यः |
| ष. | पयोमुचः | पयोमुचोः | पयोमुचाम् |
| स. | पयोमुचि | पयोमुचोः | पयोमुक्षु |

(३१) जकारान्तः पुल्लिङ्गो 'भिषज्' शब्दः

| | | | |
|---|---|---|---|
| प्र. | भिषक् | भिषजौ | भिषजः |
| द्वि. | भिषजम् | भिषजौ | भिषजः |

भिषज् शब्दः—(*Concluded*).

| | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| तृ. | भिषजा | भिषग्भ्याम् | भिषग्भिः |
| च. | भिषजे | भिषग्भ्याम् | भिषग्भ्यः |
| पं. | भिषजः | भिषग्भ्याम् | भिषग्भ्यः |
| ष. | भिषजः | भिषजोः | भिषजाम् |
| स. | भिषजि | भिषजोः | भिषक्षु |

(३२) तकारान्तः पुल्लिङ्गो 'मरुत्' शब्दः ।

| | | | |
|---|---|---|---|
| प्र. सं. | मरुत् | मरुतौ | मरुतः |
| द्वि. | मरुतम् | मरुतौ | मरुतः |
| तृ. | मरुता | मरुद्भ्याम् | मरुद्भिः |
| च. | मरुते | मरुद्भ्याम् | मरुद्भ्यः |
| पं. | मरुतः | मरुद्भ्याम् | मरुद्भ्यः |
| ष. | मरुतः | मरुतोः | मरुताम् |
| स. | मरुति | मरुतोः | मरुत्सु |

एवं भूभृत्, हरित् इत्यादयः

(३३) तकारान्तः पुल्लिङ्गो 'धीमत्' शब्दः ।

| | | | |
|---|---|---|---|
| प्र. | धीमान् | धीमन्तौ | धीमन्तः |
| द्वि. | धीमन्तम् | धीमन्तौ | धीमतः |
| तृ. | धीमता | धीमद्भ्याम् | धीमद्भिः |
| च. | धीमते | धीमद्भ्याम् | धीमद्भ्यः |
| पं. | धीमतः | धीमद्भ्याम् | धीमद्भ्यः |
| ष. | धीमतः | धीमतोः | धीमताम् |

धीमत् शब्दः—(*Concluded*).

| | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| स. | धीमति | धीमतोः | धीमत्सु |
| सं. | हे धीमन् | हे धीमन्तौ | हे धीमन्तः |

एवं श्रीमत्, गोमत्, प्रभृतयो मत्वन्ताः, भगवत्, यशस्वत्, मघवत्, प्रभृतयो, वत्वन्तशब्दाश्च ।

## (३४) तकारान्तः पुल्लिङ्गो 'गच्छत्' शब्दः ।

| | | | |
|---|---|---|---|
| प्र. | गच्छन् | गच्छन्तौ | गच्छन्तः |

शेषं धीमत् (३३) शब्दवत् ।

एवं गायत्, नृत्यत्, इच्छत्, चोरयत्, भवत् इत्यादयः शत्रन्ताश्शब्दाः ।

## (३५) तकारान्तः पुल्लिङ्गो 'ददत्' शब्दः ।

| | | | |
|---|---|---|---|
| प्र. | ददत् | ददतौ | ददतः |
| द्वि. | ददतम् | ददतौ | ददतः |

इत्यादि मरुत् (३२) शब्दवत् ।

एवं जगत्, जाग्रत् इत्यादयः ।

## (३६) तकारान्तः पुल्लिङ्गो 'महत्' शब्दः ।

| | | | |
|---|---|---|---|
| प्र. | महान् | महान्तौ | महान्तः |
| द्वि. | महान्तम् | महान्तौ | महतः |
| सं. | हे महन् | हे महान्तौ | हे महान्तः |

शेषं धीमत् (३३) शब्दवत् ।

## (३७) दकारान्तः पुल्लिङ्गः 'सुहृद्' शब्दः ।

| | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्र. सं. | सुहृत् | सुहृदौ | सुहृदः |
| द्वि. | सुहृदम् | सुहृदौ | सुहृदः |
| तृ. | सुहृदा | सुहृद्भ्याम् | सुहृद्भिः |
| च. | सुहृदे | सुहृद्भ्याम् | सुहृद्भ्यः |
| पं. | सुहृदः | सुहृद्भ्याम् | सुहृद्भ्यः |
| ष. | सुहृदः | सुहृदोः | सुहृदाम् |
| स. | सुहृदि | सुहृदोः | सुहृत्सु |

## (३८) नकारान्तः पुल्लिङ्गो 'राजन्' शब्दः ।

| | | | |
|---|---|---|---|
| प्र. | राजा | राजानौ | राजानः |
| द्वि. | राजानम् | राजानौ | राज्ञः |
| तृ. | राज्ञा | राजभ्याम् | राजभिः |
| च. | राज्ञे | राजभ्याम् | राजभ्यः |
| प. | राज्ञः | राजभ्याम् | राजभ्यः |
| ष. | राज्ञः | राज्ञोः | राज्ञाम् |
| स. | राज्ञि, राजनि | राज्ञोः | राजसु |
| सं. | हे राजन् | हे राजानौ | हे राजानः |

एवं लघिमन्, गरिमन्, महिमन्, इत्यादयः ।

## (३९) नकारान्तः पुल्लिङ्गः 'आत्मन्' शब्दः ।

| | | | |
|---|---|---|---|
| प्र. | आत्मा | आत्मानौ | आत्मानः |
| द्वि. | आत्मानम् | आत्मानौ | आत्मनः |
| तृ. | आत्मना | आत्मभ्याम् | आत्मभिः |

आत्मन् शब्दः—(*Concluded*).

| | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| च. | आत्मने | आत्मभ्याम् | आत्मभ्यः |
| पं. | आत्मनः | आत्मभ्याम् | आत्मभ्यः |
| ष. | आत्मनः | आत्मनोः | आत्मनाम् |
| स | आत्मनि | आत्मनोः | आत्मसु |
| सं. | हे आत्मन् | हे आत्मानौ | हे आत्मानः |

एवं ब्रह्मन्, यज्वन्, इत्यादयः ।

(४०) नकारान्तः पुल्लिङ्गः 'श्वन्' शब्दः ।

| | | | |
|---|---|---|---|
| प्र. | श्वा | श्वानौ | श्वानः |
| द्वि. | श्वानम् | श्वानौ | शुनः |
| तृ. | शुना | श्वभ्याम् | श्वभिः |
| सं. | हे श्वन् | हे श्वानौ | हे श्वानः |

इत्यादि ।

(४१) नकारान्तः पुल्लिङ्गो 'युवन्' शब्दः ।

| | | | |
|---|---|---|---|
| प्र. | युवा | युवानौ | युवानः |
| द्वि. | युवानम् | युवानौ | यूनः |
| तृ. | यूना | युवभ्याम् | युवभिः |

इत्यादि ।

(४२) नकारान्तः पुल्लिङ्गो 'मघवन्' शब्दः ।

| | | | |
|---|---|---|---|
| प्र. | मघवा | मघवानौ | मघवानः |
| द्वि. | मघवानम् | मघवानौ | मघोनः |

मघवन् शब्दः—(*Concluded*).

| | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| तृ. | मघोना | मघवभ्याम् | मघवभिः |
| सं. | हे मघवन् | हे मघवानौ | हे मघवानः |

इत्यादि ।

(४३) नकारान्तः पुल्लिङ्गो ‘ पथिन् ’ शब्दः ।

| | | | |
|---|---|---|---|
| प्र. सं | पन्थाः | पन्थानौ | पन्थानः |
| द्वि. | पन्थानम् | पन्थानौ | पथः |
| तृ. | पथा | पथिभ्याम् | पथिभिः |
| च. | पथे | पथिभ्याम् | पथिभ्यः |
| पं. | पथः | पथिभ्याम् | पथिभ्यः |
| ष. | पथः | पथोः | पथाम् |
| स. | पथि | पथोः | पथिषु |

एवं मथिन्, ऋभुक्षिन्, शब्दौ ।

(४४) नकारान्तः पुल्लिङ्गः ‘ शार्ङ्गिन् ’ शब्दः ।

| | | | |
|---|---|---|---|
| प्र. | शार्ङ्गी | शार्ङ्गिणौ | शार्ङ्गिणः |
| द्वि. | शार्ङ्गिणम् | शार्ङ्गिणौ | शार्ङ्गिणः |
| तृ. | शार्ङ्गिणा | शार्ङ्गिभ्याम् | शार्ङ्गिभिः |
| च. | शार्ङ्गिणे | शार्ङ्गिभ्याम् | शार्ङ्गिभ्यः |
| पं. | शार्ङ्गिणः | शार्ङ्गिभ्याम् | शार्ङ्गिभ्यः |
| ष. | शार्ङ्गिणः | शार्ङ्गिणोः | शार्ङ्गिणाम् |
| स. | शार्ङ्गिणि | शार्ङ्गिणोः | शार्ङ्गिषु |
| सं. | हे शार्ङ्गिन् | हे शार्ङ्गिणौ | हे शार्ङ्गिणः |

एवं गुणिन्, करिन्, ज्ञानिन् इत्यादयः ।

### (४५) सकारान्तः पुल्लिङ्गो ‘वेधस्’ शब्दः ।

| | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्र. सं. | वेधाः | वेधसौ | वेधसः |
| द्वि. | वेधसम् | वेधसौ | वेधसः |
| तृ. | वेधसा | वेधोभ्याम् | वेधोभिः |
| च. | वेधसे | वेधोभ्याम् | वेधोभ्यः |
| पं. | वेधसः | वेधोभ्याम् | वेधोभ्यः |
| ष. | वेधसः | वेधसोः | वेधसाम् |
| स. | वेधसि | वेधसोः | वेधस्सु |

एवं चन्द्रमस्, सुमनस्, इत्यादयः ।

### (४६) सकारान्तः पुल्लिङ्गो ‘विद्वस्’ शब्दः ।

| | | | |
|---|---|---|---|
| प्र. | विद्वान् | विद्वांसौ | विद्वांसः |
| द्वि. | विद्वांसम् | विद्वांसौ | विदुषः |
| तृ. | विदुषा | विद्वद्भ्याम् | विद्वद्भिः |
| च. | विदुषे | विद्वद्भ्याम् | विद्वद्भ्यः |
| पं. | विदुषः | विद्वद्भ्याम् | विद्वद्भ्यः |
| ष. | विदुषः | विदुषोः | विदुषाम् |
| स. | विदुषि | विदुषोः | विद्वत्सु |
| सं. | हे विद्वन् | हे विद्वांसौ | हे विद्वांसः |

एवं सेदिवस्, तस्थिवस् इत्यादयो वस्वन्तशब्दाः ।

### (४७) सकारान्तः पुल्लिङ्गः ‘पुंस्’ शब्दः ।

| | | | |
|---|---|---|---|
| प्र. | पुमान् | पुमांसौ | पुमांसः |
| द्वि. | पुमांसम् | पुमांसौ | पुंसः |

पुंस शब्दः—(*Concluded*).

| | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| तृ. | पुंसा | पुंभ्याम् | पुंभिः |
| च. | पुंसे | पुंभ्याम् | पुंभ्यः |
| पं. | पुंसः | पुंभ्याम् | पुंभ्यः |
| ष. | पुंसः | पुंसोः | पुंसाम् |
| स. | पुंसि | पुंसोः | पुंसु |
| सं. | हे पुमान् | हे पुमांसौ | हे पुमांसः |

(४८) शकारान्तः पुल्लिङ्गो 'विश्' शब्दः ।

| | | | |
|---|---|---|---|
| प्र. | विट् | विशौ | विशः |
| द्वि. | विशं | विशौ | विशः |

(४९) शकारान्तः पुल्लिङ्गः 'तादृश्' शब्दः ।

| | | | |
|---|---|---|---|
| प्र. | तादृक् | तादृशौ | तादृशः |
| द्वि. | तादृशम् | तादृशौ | तादृशः |
| तृ. | तादृशा | तादृग्भ्याम् | तादृग्भिः |

इत्यादि ।

(५०) षकारान्तः पुल्लिङ्गो 'द्विष्' शब्दः ।

| | | | |
|---|---|---|---|
| प्र. सं. | द्विट् | द्विषौ | द्विषः |
| द्वि. | द्विषम् | द्विषौ | द्विषः |
| तृ. | द्विषा | द्विड्भ्याम् | द्विड्भिः |
| च. | द्विषे | द्विड्भ्याम् | द्विड्भ्यः |

इत्यादि ।

### (५१) हकारान्तः पुल्लिङ्गो 'लिह्' शब्दः ।

| | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्र. सं. | लिट् | लिहौ | लिहः |
| द्वि. | लिहम् | लिहौ | लिहः |
| तृ. | लिहा | लिड्भ्याम् | लिड्भिः |

इत्यादि ।

### (५२) हकारान्तः पुल्लिङ्गः 'अनडुह्' शब्दः ।

| | | | |
|---|---|---|---|
| प्र. | अनड्वान् | अनड्वाहौ | अनड्वाहः |
| द्वि. | अनड्वाहम् | अनड्वाहौ | अनडुहः |
| तृ. | अनडुहा | अनडुद्भ्याम् | अनडुद्भिः |
| च. | अनडुहे | अनडुद्भ्याम् | अनडुद्भ्यः |
| पं. | अनडुहः | अनडुद्भ्याम् | अनडुद्भ्यः |
| ष. | अनडुहः | अनडुहोः | अनडुहाम् |
| स. | अनडुहि | अनडुहोः | अनडुत्सु |
| सं. | हे अनड्वन् | हे अनड्वाहौ | हे अनड्वाहः |

इति हलन्ताः पुल्लिङ्गाः ।

---

# अथ हलन्तस्त्रीलिङ्गसाधारणशब्दाः ।

(५३) चकारान्तः स्त्रीलिङ्गो 'वाच्' शब्दः ।

| | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्र. सं. | वाक् | वाचौ | वाचः |
| द्वि. | वाचम् | वाचौ | वाचः |
| तृ. | वाचा | वाग्भ्याम् | वाग्भिः |
| च. | वाचे | वाग्भ्याम् | वाग्भ्यः |
| पं. | वाचः | वाग्भ्याम् | वाग्भ्यः |
| ष. | वाचः | वाचोः | वाचाम् |
| स. | वाचि | वाचोः | वाक्षु |

(५४) जकारान्तः स्त्रीलिङ्गः 'स्रज्' शब्दः ।

| | | | |
|---|---|---|---|
| प्र. | स्रक् | स्रजौ | स्रजः |

इत्यादि भिषज् (३१) शब्दवत् ।

(५५) तकारान्तः स्त्रीलिङ्गः 'सरित्' शब्दः ।

| | | | |
|---|---|---|---|
| प्र. | सरित् | सरितौ | सरितः |

इत्यादि मरुत् (३२) शब्दवत्

(५६) दकारान्तः स्त्रीलिङ्गः 'शरद्' शब्दः ।

| | | | |
|---|---|---|---|
| प्र. | शरत् | शरदौ | शरदः |

इत्यादि सुहृद् (३७) शब्दवत् ।

## (५७) रेफान्तः स्त्रीलिङ्गो 'गीर्' शब्दः ।

| | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्र. सं. | गीः | गिरौ | गिरः |
| द्वि. | गिरम् | गिरौ | गिरः |
| तृ. | गिरा | गीर्भ्याम् | गीर्भिः |
| च. | गिरे | गीर्भ्याम् | गीर्भ्यः |
| पं. | गिरः | गीर्भ्याम् | गीर्भ्यः |
| ष. | गिरः | गिरोः | गिराम् |
| स. | गिरि | गिरोः | गीर्षु |

## (५८) वकारान्तः स्त्रीलिङ्गो 'दिव्' शब्दः ।

| | | | |
|---|---|---|---|
| प्र. सं. | द्यौः | दिवौ | दिवः |
| द्वि. | दिवम् | दिवौ | दिवः |
| तृ. | दिवा | द्युभ्याम् | द्युभिः |
| च. | दिवे | द्युभ्याम् | द्युभ्यः |
| पं. | दिवः | द्युभ्याम् | द्युभ्यः |
| ष. | दिवः | दिवोः | दिवाम् |
| स. | दिवि | दिवोः | द्युषु |

## (५९) शकारान्तः स्त्रीलिङ्गो 'दिश्' शब्दः ।

| | | | |
|---|---|---|---|
| प्र. | दिक् | दिशौ | दिशः |
| द्वि. | दिशम् | दिशौ | दिशः |
| तृ. | दिशा | दिग्भ्याम् | दिग्भिः |

इत्यादि ।

### (६०) षकारान्तः स्त्रीलिङ्गः 'प्रावृष्' शब्दः ।

| | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्र. | प्रावृट् | प्रावृषौ | प्रावृषः |

इत्यादि द्विष् (५०) शब्दवत् ।

### (६१) सकारान्तः स्त्रीलिङ्गः 'आशिष्' शब्दः ।

| | | | |
|---|---|---|---|
| प्र. सं. | आशीः | आशिषौ | आशिषः |
| द्वि. | आशिषम् | आशिषौ | आशिषः |
| तृ. | आशिषा | आशीर्भ्याम् | आशीर्भिः |
| च. | आशिषे | आशीर्भ्याम् | आशीर्भ्यः |
| पं. | आशिषः | आशीर्भ्याम् | आशीर्भ्यः |
| ष. | आशिषः | आशिषोः | आशिषाम् |
| स. | आशिषि | आशिषोः | आशीष्षु |

### (६२) हकारान्तः स्त्रीलिङ्गः 'उपानह्' शब्दः ।

| | | | |
|---|---|---|---|
| प्र. सं. | उपानत् | उपानहौ | उपानह |
| द्वि. | उपानहम् | उपानहौ | उपानहः |
| तृ. | उपानहा | उपानद्भ्याम् | उपानद्भिः |
| च. | उपानहे | उपानद्भ्याम् | उपानद्भ्यः |
| पं. | उपानहः | उपानद्भ्याम् | उपानद्भ्यः |
| ष. | उपानहः | उपानहोः | उपानहाम् |
| स. | उपानहि | उपानहोः | उपानत्सु |

इति हलन्ताः स्त्रीलिङ्गाः ।

---

# अथ हलन्तनपुंसकलिङ्गसाधारणशब्दाः ।

## (६३) तकारान्त नुपुंसकलिङ्गो 'जगत्' शब्दः ।

| | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्र. सं. | जगत् | जगती | जगन्ति |
| द्वि. | जगत् | जगती | जगन्ति |

शेषं मरुत् (३२) शब्दवत् ।

## (६४) तकारान्त नुपुंसकलिङ्गो 'गच्छत्' शब्दः ।

| | | | |
|---|---|---|---|
| प्र. सं. | गच्छत् | गच्छान्ती | गच्छन्ति |

शेषं पुं (३४) वत् ।

एवं पचत्, चोरयत् इत्यादयः ।

## (६५) तकारान्त नपुंसकलिङ्गः 'इच्छत्' शब्दः ।

| | | | |
|---|---|---|---|
| प्र.स.द्वि. | इच्छत् | इच्छन्ती, इच्छती | इच्छन्ति |

शेषं गच्छत् (३४) शब्दवत् ।

## (६६) नकारान्त नपुंसकलिङ्गो 'नामन्' शब्दः ।

| | | | |
|---|---|---|---|
| प्र. द्वि. | नाम | नाम्नी, नामनी | नामानि |
| सं. | हे नामन्<br>हे नाम | हे नाम्नी<br>हे नामनी | हे नामनि |

शेषं राजन् (३८) शब्दवत् ।

## (६७) नकारान्त नपुंसकलिङ्गो 'ब्रह्मन्' शब्दः ।

| | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्र. द्वि. | ब्रह्म | ब्रह्मणी | ब्रह्माणि |
| सं. | हे ब्रह्मन् / हे ब्रह्म | हे ब्रह्मणी | हे ब्रह्माणि |

शेषं आत्मन् (३९) शब्दवत् ।

एवं वर्मन्, शर्मन् इत्यादयः ।

## (६८) नकारान्त नपुंसकलिङ्गो 'दण्डिन् शब्दः ।

| | | | |
|---|---|---|---|
| प्र. द्वि. | दण्डि | दण्डिनी | दण्डीनि |
| स. | हे दण्डिन् / हे दण्डि | हे दण्डिनी | हे दण्डीनि |

शेषं शार्ङ्गिन् (४४) शब्दवत् ।

एवं मनोहारिन्, स्रग्विन् इत्यादयः ।

## (६९) सकारान्त नपुंसकलिङ्गः 'पयस्' शब्दः ।

| | | | |
|---|---|---|---|
| प्र.द्वि.सं. | पयः | पयसी | पयांसि |

शेषं वेधस् (४५) शब्दवत् ।

## (७०) सकारान्त नपुंसकलिङ्गो 'हविस्' शब्दः ।

| | | | |
|---|---|---|---|
| प्र. सं. | हविः | हविषी | हवींषि |
| द्वि. | हविः | हविषी | हवींषि |
| तृ. | हविषा | हविर्भ्याम् | हविर्भिः |

इत्यादि ।

एवं अर्चिस्, आयुस्, धनुस् इत्यादयः ।

इति हलन्ताः नपुंसकलिङ्गाः ।

सर्व, विश्व, कतर, कतम, यतर, यतम, ततर, ततम, एकतर, एकतम, अन्य, अन्यतर, इतर, त्व, सम, सीम, नेम, पूर्व, पर, अवर, दक्षिण, उत्तर, अधर, अपर, स्व, अन्तर, एक, उभ, उभय, द्वि, त्वत्, भवत्, तद्, यद्, एतद्, युष्मद् अस्मद्, किम्, इदम्, अदस्।

# एते सर्वनामशब्दाः।

## (७१) अकारान्तः पुल्लिङ्गः 'सर्व' शब्दः।

| | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्र. | सर्वः | सर्वौ | सर्वे |
| द्वि. | सर्वम् | सर्वौ | सर्वान् |
| तृ. | सर्वेण | सर्वाभ्याम् | सर्वैः |
| च. | सर्वस्मै | सर्वाभ्याम् | सर्वेभ्यः |
| पं. | सर्वस्मात् | सर्वाभ्याम् | सर्वेभ्यः |
| ष. | सर्वस्य | सर्वयोः | सर्वेषाम् |
| स. | सर्वस्मिन् | सर्वयोः | सर्वेषु |
| सं. | हे सर्व | हे सर्वौ | हे सर्वे |

एवं विश्वादयः।

## (७२) आकारान्तः स्त्रीलिङ्गः 'सर्वा' शब्दः।

| | | | |
|---|---|---|---|
| प्र. | सर्वा | सर्वे | सर्वाः |
| द्वि. | सर्वाम् | सर्वे | सर्वाः |
| तृ. | सर्वया | सर्वाभ्याम् | सर्वाभिः |

सर्व शब्दः—(*Concluded*).

| | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| च. | सर्वस्यै | सर्वाभ्याम् | सर्वाभ्यः |
| पं. | सर्वस्याः | सर्वाभ्याम् | सर्वाभ्यः |
| ष. | सर्वस्याः | सर्वयोः | सर्वासाम् |
| स. | सर्वस्याम् | सर्वयोः | सर्वासु |
| सं. | हे सर्वे | हे सर्वे | हे सर्वाः |

(७३) अकारान्त नपुंसकलिङ्गः 'सर्व' शब्दः ।

| | | | |
|---|---|---|---|
| प्र. द्वि. | सर्वम् | सर्वे | सर्वाणि |

शेषं पुं (७१) वत् ।

(७४) अकारान्तः पुल्लिङ्गः 'पूर्व' शब्दः ।

| | | | |
|---|---|---|---|
| प्र. | पूर्वः | पूर्वौ | पूर्वे, पूर्वाः |
| द्वि. | पूर्वम् | पूर्वौ | पूर्वान् |
| तृ. | पूर्वेण | पूर्वाभ्याम् | पूर्वैः |
| च. | पूर्वस्मै | पूर्वाभ्याम् | पूर्वेभ्यः |
| पं. | पूर्वस्मात्, पूर्वात् | पूर्वाभ्याम् | पूर्वेभ्यः |
| ष. | पूर्वस्य | पूर्वयोः | पूर्वेषाम् |
| स. | पूर्वस्मिन्, पूर्वे | पूर्वयोः | पूर्वेषु |
| सं. | हे पूर्व | हे पूर्वौ | हे पूर्वे<br>हे पूर्वाः |

एवं पर, अवर, दक्षिण, उत्तर, अपर, अधर शब्दाः ।

